# .. vAyu stuti, praising hari (trivikrAma paNDita) ..

## ॥ वायु स्तुति ॥

॥ श्री हरिवायुस्तुतिः ॥

॥ अथ श्री नखस्तुतिः ॥

पान्त्वस्मान् पुरुहूतवैरि बलवन्मातङ्ग माद्यद्घटा ।
कुंभोच्चाद्रि विपाटनाधिकपटु प्रत्येक वज्रायिताः ।
श्रीमत्कंठीरवास्य प्रतत सुनखरा दारितारातिदूर ।
प्रद्ध्वस्तध्वांत शांत प्रवितत मनसा भाविताNाकिवृंदैः ॥ १॥
लक्ष्मीकांत समंततोऽपिकलयन् नैवेशितुस्ते समम् ।
पश्याम्युत्तम वस्तु दूरतरतोपास्तं रसोयोऽष्टमः ।
यद्रोशोत्कर दक्ष नेत्र कुटिल प्रांतोत्थिताग्नि स्फुरत् ।
खद्योतोपम विस्फुलिङ्गभसिता ब्रह्मेशशक्रोत्कराः ॥ २॥

इति श्रीमदानंदतीर्थभगवत्पादाचार्यविरचितं
श्रीनृसिंहनखस्तुतिः संपुर्णम्

॥ अथ श्री हरिवायुस्तुतिः ॥

श्रीमद्विष्ण्वंघ्रि निष्ठा अतिगुणगुरुतम श्रीमदानंदतीर्थ ।
त्रैलोक्याचार्य पादोज्ज्वल जलजलसत् पांसवोऽस्मान्पुनंतु ।
वाचांयत्रप्रणेत्रीत्रिभुवनमहिता शारदा शारदेंदुः ।
ज्योत्स्नाभद्रस्मित श्रीधवळितककुभाप्रेमभारंबभार ॥ १॥
उत्कंठाकुंठकोलाहलजवविदिताजस्रसेवानुवृद्ध ।
प्राज्ञात्मज्ञान धूतांधतमससुमनो मौलिरत्नावळीनाम् ।
भक्त्युद्रेकावगाढ प्रघटनसघटात्कार संघृष्यमाण ।
प्रांतप्राग्र्यांघ्रि पीठोत्थित कनकरजः पिंजरारंजिताशाः ॥ २॥
जन्माधिव्याध्युपाधिप्रतिहतिविरहप्रापकाणां गुणानाम् ।
अग्र्याणां अर्पकाणां चिरमुदितचिदानंद संदोहदानाम् ।
एतेषामेशदोष प्रमुषितमनसां द्वेषिणां दूषकाणाम् ।
दैत्यानामार्थिमंधे तमसि विदधतां संस्तवेनास्मि शक्तः ॥ ३॥
अस्याविष्कर्तुकामं कलिमलकलुषेऽस्मिन्जनेज्ञानमार्गम् ।
वन्द्यं चन्द्रेन्द्ररुद्र द्युमणिफणिवयोः नायकद्यैरिहाद्य ।
मध्वाख्यं मंत्रसिद्धं किमुतकृतवतो मारुतस्यावतारम् ।
पातारं पारमेष्ठ्यं पदमपविपदः प्राप्तुरापन्न पुंसाम् ॥ ४॥
उद्यद्विद्युत्प्रचंडां निजरुचि निकरव्याप्त लोकावकाशो ।
बिभ्रद्भीमो भुजेयोऽभ्युदित दिनकराभाङ्गदाढ्य प्रकाण्डे ।
वीर्योद्धार्यां गदाग्र्यामयमिह सुमतिंवायुदेवोविदध्यात् ।

अध्यात्मज्ञाननेता यतिवरमहितो भूमिभूषामणिर्मे ॥ ५ ॥
संसारोत्तापनित्योपशमद सदय स्नेहहासांबुपूर ।
प्रोद्यद्विद्यावनद्य द्युतिमणिकिरण श्रेणिसंपूरिताशः ।
श्रीवत्सांकाधि वासोचित तरसरलश्रीमदानंदतीर्थ ।
क्षीरांभोधिर्विभिन्द्याद्भवदनभिमतंभूरिमेभूति हेतुः ॥ ६ ॥
मूर्धन्येषोऽन्जलिर्मे दृढतरमिहते बध्यते बंधपाश ।
क्षेत्रेधात्रे सुखानां भजति भुवि भविष्यद्विधात्रे द्युभर्त्रे ।
अत्यंतं संततं त्वं प्रदिश पदयुगे हन्त संताप भाजाम् ।
अस्माकं भक्तिमेकां भगवत उतते माधवस्याथ वायोः ॥ ७ ॥
साभ्रोष्णाभीशु शुभ्रप्रभमभयनभो भूरिभूभृद्विभूतिः ।
भ्राजिष्णुर्भूर्ऋभूणां भवनमपि विभोऽभेदिबभ्रेबभूवे ।
येनभ्रोविभ्रमस्ते भ्रमयतुसुभृशं बभ्रुवद्दुर्भृताशान् ।
भ्रान्तिर्भेदाव भासस्त्वितिभयमभि भोर्भूक्ष्यतोमायिभिक्षून् ॥ ८ ॥
येऽमुंभावंभजंते सुरमुखसुजनाराधितं ते तृतीयम् ।
भासंते भासुरैस्ते सहचरचलितैश्चामरैश्चारुवेशाः ।
वैकुण्ठे कण्ठलग्न स्थिरशुचि विलसत्कांति तारुण्यलीला ।
लावण्या पूर्णकांता कुचभरसुलभाश्लेषसम्मोदसांद्राः ॥ ९ ॥
आनंदान्मंदमंदा ददति हि मरुतः कुंदमंदारनंद्यावर्ता ।
ऽमोदान् दधानां मृदुपद मुदितोद्गीतकैः सुंदरीणाम् ।
वृंदैरावंद्य मुक्तेन्द्वहिमगु मदनाहींद्र देवेन्द्रसेव्ये ।
मौकुंदे मन्दरेऽस्मिन्नविरतमुदयन्मोदिनां देव देव ॥ १० ॥
उत्तप्तात्युत्कटत्विट् प्रकटकटकट ध्वानसङ्घट्टनोद्यद् ।
विद्युद्व्यूढस्फुलिङ्ग प्रकर विकिरणोत्क्वाथिते बाधिताङ्गान् ।
उद्गाढंपात्यमाना तमसि तत इतः किंकरैः पंकिलेते ।
पंक्तिर्ग्राव्णां गरिम्णां ग्लपयति हि भवद्वेषिणो विद्वदाद्य ॥ ११ ॥
अस्मिन्नस्मद्गुरूणां हरिचरण चिरध्यान सन्मङ्गलानाम् ।
युष्माकं पार्श्वभूमिं धृतरणरणिकः स्वर्गिसेव्यांप्रपन्नः ।
यस्तूदास्ते स आस्तेऽधिभवमसुलभ क्लेश निर्मूकमस्त ।
प्रायानंदं कथं चिन्नवसति सततं पंचकष्टेऽतिकष्टे ॥ १२ ॥
क्षुत् क्षामान् रूक्षरक्षो रदखरनखर क्षुण्णविक्षोभिताक्षान् ।
आमग्नानांधकूपे क्षुरमुखमुखरैः पक्षिभिर्विक्षताङ्गान् ।
पूयासृन्मूत्र विष्ठा क्रिमिकुलकलिलेतत्क्षणक्षिप्त शक्त्याद्यस्त्र ।
व्रातार्दितान् स्त्वद्विष उपजिहते वज्रकल्पा जलूकाः ॥ १३ ॥
मातर्मेमातरिश्वन् पितरतुलगुरो भ्रातरिष्टाप्तबंधो ।
स्वामिन्सर्वान्तरात्मन्नजरजरयितः जन्ममृत्यामयानाम् ।
गोविंदे देहिभक्तिं भवतिच भगवन्नूर्जितां निर्निमित्ताम् ।

निर्व्याजां निश्चलां सद्गुणगण बृहतीं शाश्वतीमाशुदेव ॥१४॥
विष्णोरत्त्युत्तमत्वादखिलगुणगणैस्तत्र भक्तिंगरिष्ठाम् ।
संश्लिष्टे श्रीधराभ्याममुमथ परिवारात्मना सेवकेषु ।
यः संधत्ते विरिंचि श्वसन विहगपानंत रुद्रेन्द्र पूर्वे ।
ष्वाध्यायंस्तारतम्यं स्फुटमवति सदा वायुरस्मद्गुरुस्तम् ॥१५॥
तत्त्वज्ञान् मुक्तिभाजः सुखयिसि हि गुरो योग्यतातारतम्यात् ।
आधत्से मिश्रबुद्धिं स्त्रिदिवनिरयभूगोचरान्नित्यबद्धान् ।
तामिस्रांधादिकाख्ये तमसिसुबहुलं दुःखयस्यन्यथाज्ञान् ।
विष्णोराज्ञाभिरित्थं शृति शतमितिहासादि चाकर्णयामः ॥१६॥
वंदेऽहं तं हनूमानिति महितमहापौरुषो बाहुशालि ।
ख्यातस्तेऽग्र्योऽवतारः सहित इह बहुब्रह्मचर्यादि धर्मैः ।
सस्नेहानां सहस्वानहरहरहितं निर्दहन् देहभाजाम् ।
अंहोमोहापहो यः स्पृहयति महतीं भक्तिमद्यापि रामे ॥१७॥
प्राक्पंचाशत्सहस्रैर्व्यवहितमहितं योजनैः पर्वतं त्वम् ।
यावत्संजीवनाद्यौषध निधिमधिकप्राणलंकामनैषिः ।
अद्राक्षीदुत्पतंतं तत उत गिरिमुत्पाटयंतं गृहीत्वा ।
यांतं खे राघवांघ्रौ प्रणतमपि तदैकक्षणे त्वांहिलोकः ॥१८॥
क्षिप्तः पश्चात्सत्सलीलं शतमतुलमते योजनानां स ।
उच्चस्तावद्विस्तार वंश्च्यापि उपललवैव व्यग्रबुद्धया त्वयातः ।
स्वस्वस्थानस्थितातिस्थिरशकल शिलाजाल संश्लेष नष्ट ।
छेदांकः प्रागिवाभूत् कपिवरवपुषस्ते नमः कौशलाय ॥१९॥
दृष्ट्वा दृष्टाधिपोरः स्फुटितकनक सद्वर्म घृष्टास्थिकूटम् ।
निष्पिष्टं हाटकाद्रि प्रकट तट तटाकाति शङ्को जनोऽभूत् ।
येनाजौ रावणारिप्रियनटनपटुर्मुष्टिरिष्टं प्रदेष्टुम् ।
किंनेष्टे मे स तेऽष्टापदकट कतटित्कोटि भामृष्ट काष्टः ॥२०॥
देव्यादेश प्रणीति दृहिण हरवरावद्य रक्षो विघाता ।
ऽद्यासेवोद्यद्दयार्द्रः सहभुजमकरोद्रामनामा मुकुंदः ।
दुष्प्रापे पारमेष्ठ्ये करतलमतुलं मूर्धिविन्यस्य धन्यम् ।
तन्वन्भूयः प्रभूत प्रणय विकसिताब्जेक्षणस्त्वेक्षमाणः ॥२१॥
जघ्नेनिघ्नेनविघ्नो बहुलबलबकध्वंस नाद्येनशोचत् ।
विप्रानुक्रोश पाशैरसु विधृति सुखस्यैकचक्राजनानाम् ।
तस्मैतेदेव कुर्मः कुरुकुलपतये कर्मणाचप्रणामान् ।
किर्मीरं दुर्मतीनां प्रथमं अथ च यो नर्मणा निर्ममाथ ॥२२॥
निर्मृद्नन्नत्य यत्नं विजरवर जरासंध कायास्थिसन्धीन् ।
युद्धे त्वं स्वध्वरे वापशुमिवदमयन् विष्णु पक्षद्विडीशम् ।
यावत्प्रत्यक्ष भूतं निखिलमखभुजं तर्पयामासिथासौ ।

तावत्यायोजि तृप्त्याकिमुवद भघवन् राजसूयाश्वमेधे ॥ २३॥
क्ष्वेलाक्षीणाट्टहासहं तवरणमरिहन्नुद्गदोद्दामबाहोः ।
बह्वक्षौहिण्य नीकक्षपण सुनिपुणं यस्य सर्वोत्तमस्य ।
शुश्रूशार्थं चकर्थ स्वयमयमथ संवक्तुमानंदतीर्थ ।
श्रीमन्नामन्समर्थस्त्वमपि हि युवयोः पादपद्मं प्रपद्ये ॥ २४॥
दृह्यंतींहृदृहं मां दृतमनिल बलाद्रावयंतीमविद्या ।
निद्रांविद्राव्य सद्यो रचनपटुमथापाद्यविद्यासमुद्र ।
वाग्देवी सा सुविद्या द्रविणद विदिता द्रौपदी रुद्रपत्न्यात् ।
उद्रिक्ताद्रागभद्रा द्रहयतु दयिता पूर्वभीमाज्ञयाते ॥ २५॥
याभ्यां शुश्रूषुरासीः  कुरुकुल जनने क्षत्रविप्रोदिताभ्याम् ।
ब्रह्मभ्यां बृंहिताभ्यां चितसुख वपुषा कृष्णनामास्पदाभ्याम् ।
निर्भेदाभ्यां विशेषाद्विवचन विशयाभ्यामुभाभ्याममूभ्याम् ।
तुभ्यं च क्षेमदेभ्यः सरिसिजविलसल्लोचनेभ्यो नमोऽस्तु ॥ २६॥
गच्छन् सौगंधिकार्थं पथि स हनुमतः पुच्छमच्छस्य ।
भीमः प्रोद्धर्तुं नाशकत्स त्वमुमुरुवपुषा भीषयामास चेति ।
पूर्णज्ञानौजसोस्ते गुरुतमवपुषोः श्रीमदानंदतीर्थ ।
क्रीडामात्रं तदेतत् प्रमदद सुधियां मोहक द्वेषभाजाम् ॥ २७॥
बह्वीः कोटीरटीकः कुटलकटुमतीनुत्कटाटोप कोपान् ।
द्राक्चत्वं सत्वरत्वाच्चरणद गदया पोथयामासिथारीन् ।
उन्मथ्या तत्थ्य मिथ्यात्व वचन वचनान् उत्पथस्थांस्तथाऽयान् ।
प्रायच्छः स्वप्रियायै प्रियतम कुसुमं प्राण तस्मै नमस्ते ॥ २८॥
देहादुत्क्रामितानामधिपति रसतामक्रमाद्वक्रबुद्धिः ।
क्रुद्धः क्रोधैकवश्यः क्रिमिरिव मणिमान् दुष्कृती निष्क्रियार्थम् ।
चक्रे भूचक्रमेत्य क्रकचमिव सतां चेतसः कष्टशास्त्रं ।
दुस्तर्कं चक्रपाणेर्गुणगण विरहं जीवतां चाधिकृत्य ॥ २९॥
तद्वुत्प्रेक्षानुसारात्कतिपय कुनरैरादृतोऽन्यैर्विसृष्टो ।
ब्रह्माहं निर्गुणोऽहं वितथमिदमिति ह्येषपाशंडवादः ।
तद्युक्त्याभास जाल प्रसर विषतरूद्दाहदक्षप्रमाण ।
ज्वालामालाधरोऽग्निः पवन विजयते तेऽवतारस्तृतीयः ॥ ३०॥
आक्रोशंतोनिराशा भयभर विवशस्वाशयाच्छिन्नदर्पा ।
वाशंतो देशनाशस्त्विति बत कुधियां नाशमाशादशाऽशु ।
धावंतोऽश्लीलशीला वितथ शपथ शापा शिवाः शांत शौर्याः ।
त्वद्व्याख्या सिंहनादे सपदि ददृशिरे मायि गोमायवस्ते ॥ ३१॥
त्रिष्वप्येवावतारेष्वरिभिरपघृणं हिंसितोनिर्विकारः ।
सर्वज्ञः सर्वशक्तिः सकलगुणगणापूर्ण रूपप्रगल्भः ।
स्वच्छः स्वच्छंद मृत्युः सुखयसि सुजनं देवकिं चित्रमत्र ।

त्राता यस्य त्रिधामा जगदुतवशगं किंकराः शंकराद्याः ॥ ३२॥
उद्यन्मंदस्मित श्रीर्मृदु मधुमधुरालाप पीयूषधारा ।
पूरासेकोपशांता सुखसुजन मनोलोचना पीयमानं ।
संद्रक्ष्येसुंदरं संदुहदिह महदानंदं आनंदतीर्थ ।
श्रीमद्वक्त्रेंद्व बिंबं दुरतनुदुदितं नित्यदाहं कदानु ॥ ३३॥
प्राचीनाचीर्ण पुण्योच्चय चतुरतराचारतश्चारुचित्तान् ।
अत्युच्चां रोचयंतीं शृतिचित वचनांश्राव कांश्चोद्यचुंचून् ।
व्याख्यामुत्खात दुःखां चिरमुचित महाचार्य चिंतारतांस्ते ।
चित्रां सच्छास्त्रकर्ताश्चरण परिचरां छ्रावयास्मांश्चकिंचित् ॥ ३४॥
पीठेरत्नोकपक्लृप्ते रुचिररुचिमणि ज्योतिषा सन्निषण्णम् ।
ब्रह्माणं भाविनं त्वां ज्वलति निजपदे वैदिकाद्या हि विद्याः ।
सेवंते मूर्तिमत्यः सुचरितचरितं भाति गंधर्व गीतं ।
प्रत्येकं देवसंसत्स्वपि तव भघवन्नर्तितद्द्योवधूषु ॥ ३५॥
सानुक्रोषैरजस्रं जनिमृति निरयाद्यूर्मिमालाविलेऽस्मिन् ।
संसाराब्धौनिमग्नांशरणमशरणानिच्छतो वीक्ष्यजंतून् ।
युष्माभिः प्रार्थितः सन् जलनिधिशयनः सत्यवत्यां महर्षेः ।
व्यक्तश्चिन्मात्र मूर्तिनखलु भगवतः प्राकृतो जातु देहः ॥ ३६॥
अस्तव्यस्तं समस्तशृति गतमधमैः रत्नपूगं यथांधैः ।
अर्थं लोकोपकृत्यैः गुणगणनिलयः सूत्रयामास कृत्स्नम् ।
योऽसौ व्यासाभिधानस्तमहमहरहः भक्तितस्त्वत्प्रसादात् ।
सद्यो विद्योपलब्ध्यै गुरुतममगुरुं देवदेवं नमामि ॥ ३७॥
आज्ञामन्यैरधार्यां शिरसि परिसरद्रश्मि कोटीरकोटौ ।
कृष्णस्याक्लिष्ट कर्मादधदनु सराणादर्थितो देवसङ्घैः ।
भूमावागत्य भूमन्नसुकरमकरोर्ब्रह्मसूत्रस्य भाष्यम् ।
दुर्भाष्यं व्यास्यदस्योर्मणिमत उदितं वेदसद्युक्तिभिस्त्वम् ॥ ३८॥
भूत्वाक्षेत्रे विशुद्धे द्विजगणनिलये रौप्यपीठाभिधाने ।
तत्रापि ब्रह्मजातिस्त्रिभुवन विशदे मध्यगेहाख्य गेहे ।
पारिव्राज्याधि राजः पुनरपि बदरीं प्राप्य कृष्णं च नत्वा ।
कृत्वा भाष्याणि सम्यक् व्यतनुत च भवान् भरतार्थप्रकाशम् ॥ ३९॥
वंदे तं त्वां सुपूर्णं प्रमतिमनुदिना सेवितं देववृन्दैः ।
वंदे वंदारुमीशे श्रिय उत नियतं श्रीमदानंदतीर्थम् ।
वंदे मंदाकिनी सत्सरिदमल जलासेक साधिक्य सङ्गम् ।
वंदेऽहं देव भक्त्या भव भय दहनं सज्जनान्मोदयंतम् ॥ ४०॥
सुब्रह्मण्याख्य सूरेः सुत इति सुभृशं केशवानंदतीर्थ ।
श्रीमत्पादाब्ज भक्तः स्तुतिमकृत हरेर्वायुदेवस्य चास्य ।
त्वत्पादार्चादरेण ग्रथित पदल सन्मालया त्वेतयाये ।

संराध्यामूनमंति प्रततमतिगुणा मुक्तिमेते व्रजंति ॥ ४१॥

इति श्री त्रिविक्रमपण्डिताचार्य विरचितं
श्री हरिवायुस्तुतिः संपूर्णम्

॥ अथ श्री नखस्तुतिः ॥

पान्त्वस्मान् पुरुहूतवैरि बलवन्मातङ्ग माद्यद्घटा ।
कुंभोच्चाद्रि विपाटनाधिकपटु प्रत्येक वज्रायिताः ।
श्रीमत्कंठीरवास्य प्रतत सुनखरा दारितारातिदूर ।
प्रद्ध्वस्तध्वांत शांत प्रवितत मनसा भाविताناकिवृंदैः ॥ १॥
लक्ष्मीकांत समंततोऽपिकलयन् नैवेशितुस्ते समम् ।
पश्याम्युत्तम वस्तु दूरतरतोपास्तं रसोयोऽष्टमः ।
यद्रोशोत्कर दक्ष नेत्र कुटिलः प्रांतोत्थिताग्नि स्फुरत् ।
खद्योतोपम विस्फुलिङ्गभसिता ब्रह्मेशशक्रोत्कराः ॥ २॥

इति श्रीमदानंदतीर्थभगवत्पादाचार्यविरचितं
श्रीनृसिंहनखस्तुतिः संपुर्णम्

॥ भारतीरमणमुख्यप्राणांतर्गत श्रीकृष्णार्पणमस्तु ॥

वायुर्भीमो भीमनादो महूजाः सर्वेशां च प्राणिनां प्राणभूतः ।
अनावृत्तिर्देहिनां देहपाते तस्माद्वायुर्देवदेवो विशिष्टः ॥ ॥
ज्ञाने विरागे हरिभक्तिभावे धृतिस्थितिप्राणबलेषि योगे ।
बुद्धौ च नान्यो हनुमत्समानः पुमान् कदाचित् क्वचकश्च नैव ॥ ॥
वातेन कुन्त्यां बलवान् स जातः शूरस्तपस्वी द्विषतां निहंता ।
सत्ये च धर्मे च रतः सदैव पराक्रमे शत्रुभिरप्रधृष्यः ॥ ॥
यो विप्रलंभविपरीतमतिप्रभूतान् वादान्निरस्त कृतवान्भुवि तत्त्ववादम् ।
सर्वेश्वरो हरिरिति प्रतिपादयंतमानंदतीर्थ मुनिवर्यमहं नमामि ॥ ॥
यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलम् ।
बट् तद्दर्शनमित्थमेव निहितं देवस्य भर्गो महत् ।
वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपुः ।
मध्वो यत्तु तृतीयमेतदमुना ग्रन्थः कृतः केशवे ॥ ॥
महाव्याकरणांभोधि मंथमानसमंदरम् ।
कवयंतं रामकीर्त्या हनूमंतमुपास्महे ॥ ॥
ब्रह्मान्ता गुरवः साक्षादिष्टं दैवं श्रियः पतिः ।
आचार्याः श्रीमदाचार्याः संतु मे जन्म जन्मनि ॥ ॥
प्रथमो हनुमान्नामा द्वितीयो भीम एव च ।
पूर्णप्रज्ञ तृतीयस्तु भगवत्कार्यसाधकः ॥ ॥
मुख्यप्राणाय भीमाय नमो यस्य भुजांतरम्
नाना वीरसुवर्णानां निकषाश्मायितं बभौ ॥ ॥
स्वांतस्थानंतशैयाय पूर्णज्ञानरसार्णसे ।

उत्तुङ्गवाक्तरङ्गाय मध्वदुग्धाब्धये नमः ॥ ॥
येनाहं इह दुर्मार्गात् उद्धृत्यादि निवेशितः ।
सम्यक् श्रीवैष्णवे मार्गे पूर्णप्रज्ञं नमामि तम् ॥ ॥
हनूमानंजनी सूनुः वायुपुत्रो महाबलः ।
रामेष्टः फल्गुणसखः पिङ्गाक्षोऽमितविक्रमः ॥ ॥
उदधिक्रमणश्चैव सीतासंदेशहारकः ।
लक्ष्मणप्राणदाता च दशग्रीवस्य दर्पहा ॥ ॥
मारुतिः पाण्डवो भीमो गदापाणिर्वृकोदरः ।
कौन्तेयः कृष्णदूतश्च भीमसेनो महाबलः ॥ ॥
जरासंधांतको वीरो दुःशासन विनाशनः ।
पूर्णप्रज्ञो ज्ञानदाता मध्वो ध्वस्त दुरागमः ॥ ॥
तत्त्वज्ञो वैष्णवाचार्यो व्यासशिष्यो यतीश्वरः ॥१ ॥
शुभतीर्थाभिधानश्च जितामित्रो जितेन्द्रियः ।
श्रीमदानंद सन्नाम्नामेव द्वादशकं जपेत् ।
लभते वैष्णवीं भक्तिं गुरुभक्ति समन्वितम् ॥ ॥
मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसा नमामि ॥ ॥
बुद्धिर्बलं यशो धैर्यं निर्भयत्त्वं अरोगता ।
अजाड्यं वाक्पटुत्त्वं च हनूमत्स्मरणद्भवेत् ॥ ॥
न माधवसमो देवो न च मध्व समो गुरुः ।
न तद्वाक्यसमं शास्त्रं न च तस्य समः पुमान् ॥ ॥
भीमसेन समो नास्ति सेनयोरुभयोरपि ।
पाण्डित्येच पटुत्वे च शूरत्वे च बलेपि च ॥ ॥
आचार्यः पवनोऽस्माकं आचार्याणी च भारती ।
देवो नारायणः श्रीशः देवी मङ्गळ देवता ॥ ॥

Encoded and proofread by H. P. Raghunandan, Shrisha Rao shrao at dvaita.org

---